॥ गायत्री संहिता ॥

आदि शक्तिरिति विष्णोस्तामहं प्रणमामि हि ।
सर्गः स्थितिर्विनाशश्च जायन्ते जगतोऽनया ॥ १॥

नाभि-पद्म-भुवा विष्णोर्ब्रह्मणा निर्मितं जगत् ।
स्थावरं जङ्गमं शक्त्या गायत्र्या एव वै ध्रुवम् ॥ २॥

चन्द्रशेखर केशेभ्यो निर्गता हि सुरापगा ।
भगीरथं ततारैव परिवारसमं यथा ॥ ३॥

जगद्धात्री समुद्धूय या हृन्मानसरोवरे ।
गायत्री सकुलं पारं तथा नयति साधकम् ॥ ४॥

सास्ति गङ्गैव ज्ञानाख्यसुनीरेण समाकुला ।
ज्ञान गङ्गा तु तां भक्त्या वारं-वारं नमाम्यहम् ॥ ५॥

ऋषयो वेद-शास्त्राणि सर्वे चैव महर्षयः ।
श्रद्धया हृदि गायत्रीं धारयन्ति स्तुवन्ति च ॥ ६॥

ह्रीं श्रीं क्लीं चेति रूपैस्तु त्रिभिर्वा लोकपालिनी ।
भासते सततं लोके गायत्री त्रिगुणात्मिका ॥ ७॥

गायत्र्यैव मता माता वेदानां शास्त्रसम्पदाम् ।
चत्वारोऽपि समुत्पन्ना वेदास्तस्या असंशयम् ॥ ८॥

परमात्मनस्तु या लोके ब्रह्म शक्तिर्विराजते ।
सूक्ष्मा च सात्त्विकी चैव गायत्रीत्यभिधीयते ॥ ९॥

प्रभावादेव गायत्र्या भूतानामभिजायते ।
अन्तःकरणेषु देवानां तत्त्वानां हि समुद्भवः ॥ १०॥

गायत्र्युपासनाकरणादात्मशक्तिर्विवर्धते ।
प्राप्यते क्रमशोऽजस्य सामीप्यं परमात्मनः ॥ ११॥

शौचं शान्तिर्विवेकश्चैतल्लाभ त्रयमात्मिकम् ।
पश्चादवाप्यते नूनं सुस्थिरं तदुपासकम् ॥ १२॥

कार्येषु साहसः स्थैर्यं कर्मनिष्ठा तथैव च ।
एते लाभाश्च वै तस्माज्जायन्ते मानसास्त्रयः ॥ १३॥

पुष्कलं धन-संसिद्धिः सहयोगश्च सर्वतः ।
स्वास्थ्यं वा त्रय एते स्युस्तस्माल्लाभाश्च लौकिकाः ॥ १४॥

काठिन्यं विविधं घोरं ह्यापदां संहतिस्तथा ।
शीघ्रं विनाशतां यान्ति विविधा विघ्नराशयः ॥ १५॥

विनाशादुक्त शत्रूणामन्तः शक्तिर्विवर्धते ।
संकटानामनायासं पारं याति तया नरः ॥ १६॥

गायत्र्युपासकस्वान्ते सत्कामा उद्भवन्ति हि ।
तत्पूर्तयेऽभिजायन्ते सहजं साधनान्यपि ॥ १७॥

त्रुटयः सर्वथा दोषा विघ्ना यान्ति यदान्तताम् ।
मानवो निर्भयं याति पूर्णोन्नति पथं तदा ॥ १८॥

बाह्यंचाभ्यन्तरं त्वस्य नित्यं सन्मार्गगामिनः ।
उन्नतेरुभयं द्वारं यात्युन्मुक्तकपाटताम् ॥ १९॥

अतः स्वस्थेन चित्तेन श्रद्धया निष्ठया तथा ।
कर्तव्याविरतं काले गायत्र्याः समुपासना ॥ २०॥

दयालुः शक्ति सम्पन्ना माता बुद्धिमती यथा ।
कल्याणं कुरुते ह्येव प्रेम्णा बालस्य चात्मनः ॥ २१॥

तथैव माता लोकानां गायत्री भक्तवत्सला ।
विदधाति हितं नित्यं भक्तानां ध्रुवमात्मनः ॥ २२॥

कुर्वन्नपि त्रुटीर्लोके बालको मातरं प्रति ।
यथा भवति कश्चिन्न तस्या अप्रीतिभाजनः ॥ २३॥

कुर्वन्नपि त्रुटीर्भक्तः क्वचित् गायत्र्युपासने ।
न तथा फलमाप्नोति विपरीतं कदाचन ॥ २४॥

अक्षराणां तु गायत्र्या गुम्फनं ह्यस्ति तद्विधम् ।
भवन्ति जागृता येन सर्वा गुह्यास्तु ग्रन्थयः ॥ २५॥

जागृता ग्रन्थयस्त्वेताः सूक्ष्माः साधकमानसे ।
दिव्यशक्तिसमुद्भूतिं क्षिप्रं कुर्वन्त्यसंशयम् ॥ २६॥

जनयन्ति कृते पुंसामेता वै दिव्यशक्तयः ।
विविधान् वै परिणामान् भव्यान् मङ्गलपूरितान् ॥ २७॥

मन्त्रस्योच्चारणं कार्यं शुद्धमेवाप्रमादतः ।
तदशक्तो जपेन्नित्यं सप्रणवास्तु व्याहृतीः ॥ २८॥

ओमिति प्रणवः पूर्वं भूर्भुवः स्वस्तदुत्तरम् ।
एषोक्ता लघु गायत्री विद्वद्भिर्वेदपण्डितैः ॥ २९॥

शुद्धं परिधानमाधाय शुद्धे वै वायुमण्डले ।
शुद्ध देहमनोभ्यां वै कार्या गायत्र्युपासना ॥ ३०॥

दीक्षामादाय गायत्र्या ब्रह्मनिष्ठाग्रजन्मना ।
आरभ्यतां ततः सम्यग्विधिनोपासना सता ॥ ३१॥

गायत्र्युपासनामुक्त्वा नित्यावश्यककर्मसु ।
उक्तस्तत्र द्विजातीनां नानध्यायो विचक्षणैः ॥ ३२॥

आराधयन्ति गायत्रीं न नित्यं ये द्विजन्मनः ।
जायन्ते हि स्वकर्मभ्यस्ते च्युता नात्र संशयः ॥ ३३॥

शूद्रास्तु जन्मना सर्वे पश्चाद्यान्ति द्विजन्मताम् ।
गायत्र्यैव जनाः साकं ह्युपवीतस्य धारणात् ॥ ३४॥

उच्चता पतितानां च पापिनां पापनाशनम् ।
जायेते कृपयैवास्याः वेदमातुरनन्तया ॥ ३५॥

गायत्र्या या युता सन्ध्या ब्रह्मसन्ध्या तु सा मता ।
कीर्तितं सर्वतः श्रेष्ठं तस्यानुष्ठानमागमैः ॥ ३६॥

आचमनं शिखाबन्धः प्राणायामोऽघमर्षणम् ।
न्यासश्चोपासनायां तु पञ्च कोषा मता बुधैः ॥ ३७॥

ध्यानतस्तु ततः पश्चात् सावधानेन चेतसा ।

जप्या सततं तुलसी मालया च मुहुर्मुहुः ॥ ३८॥

एक वारं प्रतिदिनं न्यूनतो न्यूनसङ्ख्यकम् ।
धीमान्मन्त्र शतं नूनं नित्यमष्टोत्तरं जपेत् ॥ ३९॥

ब्राह्मे मुहूर्ते प्राङ्मुखो मेरुदण्डं प्रतन्य हि ।
पद्मासनं समासीनः सन्ध्यावन्दनमाचरेत् ॥ ४०॥

दैन्यरुक् शोक चिन्तानां विरोधाक्रमणापदाम् ।
कार्यं गायत्र्यनुष्ठानं भयानं वारणाय च ॥ ४१॥

जायते सा स्थितिरस्मान्मनोऽभिलाषयान्विता ।
यतः सर्वेऽभिजायन्ते यथा कालं हि पूर्णताम् ॥ ४२॥

अनुष्ठानात्तु वै तस्माद्गुप्ताध्यात्मिक-शक्तयः ।
चमत्कारमया लोके प्राप्यन्तेऽनेकधा बुधैः ॥ ४३॥

सपादलक्षमन्त्राणां गायत्र्या जपनं तु वै ।
ध्यानेन विधिना चैव ह्यनुष्ठानं प्रचक्षते ॥ ४४ ।
पञ्चम्यां पूर्णिमायां वा चैकादश्यां तथैव हि ।
अनुष्ठानस्य कर्तव्यं आरम्भः फल-प्राप्तये ॥ ४५॥

मासद्वयेऽविरामं तु चत्वारिंषट् दिनेषु वा ।
पूरयेत्तदनुष्ठानं तुल्यसङ्ख्यासु वै जपन् ॥ ४६॥

तस्याः प्रतिमां सुसंस्थाप्य प्रेम्णा शोभन-आसने ।
गायत्र्यास्तत्र कर्तव्या सत्प्रतिष्ठा विधानतः ॥ ४७
तद्विधाय ततो दीप-धूप-नैवेद्य-चन्दनैः ।
नमस्कृत्याक्षतेनापि तस्याः पूजनमाचरेत् ॥ ४८॥

पूजनानन्तरं विज्ञः भक्त्या तज्जपमारभेत् ।
जपकाले तु मनः कार्यं श्रद्धान्वितमचञ्चलम् ॥ ४९॥

कार्यतो यदि चोत्तिष्ठेन्मध्य एव ततः पुनः ।
कर-प्रक्षालनं कृत्वा शुद्धैरङ्गैरुपाविशेत् ॥ ५०॥

आद्यशक्तिर्वेदमाता गायत्री तु मदन्तरे ।
शक्तिकल्लोलसन्दोहान् ज्ञानज्योतिश्च सन्ततम् ॥ ५१॥

उत्तरोत्तरमाकीर्य प्रेरयन्ति विराजते ।
इत्येवाविरतं ध्यायन् ध्यानमग्नस्तु तां जपेत् ॥ ५२॥

चतुर्विंशतिलक्षाणां सततं तदुपासकः ।
गायत्रीणामनुष्ठानाद्गायत्र्याः सिद्धिमाप्नुते ॥ ५३
साधनायै तु गायत्र्या निश्छलेन हि चेतसा ।
वरणीयः सदाचार्यः साधकेन सुभाजनः ॥ ५४॥

लघ्वनुष्ठानतो वापि महानुष्ठानतोऽथवा ।
सिद्धिं विन्दति वै नूनं साधकः सानुपातिकाम् ॥ ५५॥

एक एव तु संसिद्धः गायत्री मन्त्र आदिशत् ।
समस्त-लोकमन्त्राणां कार्यसिद्धेस्तु पूरकः ॥ ५६॥

अनुष्ठानावसाने तु अग्निहोत्रो विधीयताम् ।
यथाशक्ति ततो दानं ब्रह्मभोजस्ततः खलु ॥ ५७॥

महामन्त्रस्य चाप्यस्य स्थाने स्थाने पदे पदे ।
गूढानन्तोपदेशानां रहस्यं तत्र वर्तते ॥ ५८॥

यो दधाति नरश्चैतानुपदेशांस्तु मानसे ।
जायते ह्युभयं तस्य लोकमानन्दसङ्कुलम् ॥ ५९॥

समग्रामपि सामग्रीमनुष्ठानस्य पूजिताम् ।
स्थाने पवित्र एवैतां कुत्रचिद्धि विसर्जयेत् ॥ ६०॥

सत्पात्रो यदि वाचार्यो न चेत्संस्थापयेत्तदा ।
नारिकेलं शुचिं वृत्वाचार्यभावेन चासने ॥ ६१॥

प्रायश्चित्तं मतं श्रेष्ठं त्रुटीनां पापकर्मणाम् ।
तपश्चर्यैव गायत्र्याः नातोऽन्यद्दृश्यते क्वचित् ॥ ६२॥

सेव्याः स्वात्मसमुद्ध्यर्थं पदार्थाः सात्त्विकाः सदा ।
राजसाश्च प्रयोक्तव्याः मनोवाञ्छितपूर्तये ॥ ६३॥

प्रादुर्भावस्तु भावानां तामसानां विजायते ।
तमोगुणानामर्थानां सेवनादिति निश्चयः ॥ ६४॥

मालासन-समिध्यज्ञ-सामग्र्यर्चन-सङ्ग्रहः ।
गुणत्रयानुसारं हि सर्वे वै ददते फलम् ॥ ६५॥

प्रादुर्भवन्ति वै सूक्ष्माश्चतुर्विंशति शक्तयः ।
अक्षरेभ्यस्तु गायत्र्या मानवानां हि मानसे ॥ ६६॥

मुहूर्ता योगदोषा वा येऽप्यमङ्गलकारिणः ।
भस्मतां यान्ति ते सर्वे गायत्र्यास्तीव्रतेजसा ॥ ६७॥

एतस्मात्तु जपान्नूनं ध्यानमग्नेन चेतसा ।
जायते क्रमशश्चैव षट् चक्राणां तु जागृतिः ॥ ६८॥

षट् चक्राणि यदैतानि जागृतानि भवन्ति हि ।
षट् सिद्धयोऽभिजायन्ते चक्रैरेतैर्नरस्य वै ॥ ६९॥

अग्निहोत्रं तु गायत्री मन्त्रेण विधिवत् कृतम् ।
सर्वेष्ववसरेष्वेव शुभमेव मतं बुधैः ॥ ७०॥

यदावस्थासु स्याल्लोके विपन्नासु तदा तु सः ।
मौनं मानसिकं चैव गायत्री-जपमाचरेत् ॥ ७१॥

तदनुष्ठानकाले तु स्वशक्तिं नियमेज्जनः ।
निम्नकर्मसु ताः धीमान् न व्ययेद्धि कदाचन ॥ ७२
नैवानावश्यकं कार्यमात्मोद्धारस्थितेन च ।
आत्मशक्तेस्तु प्राप्तायाः यत्र तत्र प्रदर्शनम् ॥ ७३॥

आहारे व्यवहारे च मस्तिष्केऽपि तथैव हि ।
सात्त्विकेन सदा भाव्यं साधकेन मनीषिणा ॥ ७४॥

कर्तव्यधर्मतः कर्म विपरीतं तु यद्भवेत् ।
तत्साधकस्तु प्रज्ञावानाचरेन्न कदाचन ॥ ७५॥

पृष्ठतोऽस्याः साधनाया राजतेऽतितरं सदा ।
मनस्विसाधकानां हि बहूनां साधनाबलम् ॥ ७६॥

अल्पीयस्या जगत्येवं साधनायास्तु साधकः ।
भगवत्याश्च गायत्र्याः कृपां प्राप्नोत्यसंशयम् ॥ ७७॥

प्राणायामे जपन् लोकः गायत्रीं ध्रुवमाप्नुते ।
निग्रहं मनसश्चैव इन्द्रियाणां हि सम्पदाम् ॥ ७८॥

मन्त्रं विभज्य भागेषु चतुर्षु सुबुधस्तदा ।
रेचकं कुम्भकं बाह्यं पूरकं कुम्भकं चरेत् ॥ ७९॥

यथा पूर्वस्थितञ्चैव न द्रव्यं कार्य-साधकम् ।
महासाधनतोऽप्यस्मान्नाज्ञो लाभं तथाप्नुते ॥ ८०॥

साधकः कुरुते यस्तु मन्त्रशक्तेरपव्ययः ।
तं विनाशयति सैव समूलं नात्र संशयः ॥ ८१॥

सततं साधनाभिर्यो याति साधकतां नरः ।
स्वप्नावस्थासु जायन्ते तस्य दिव्यानुभूतयः ॥ ८२॥

सफलः साधको लोके प्राप्नुतेऽनुभवान् नवान् ।
विचित्रान् विविधाँश्चैव साधनासिद्ध्यनन्तरम् ॥ ८३॥

भिन्नाभिर्विधिभिर्बुद्ध्या भिन्नासु कार्यपङ्क्तिषु ।
गायत्र्याः सिद्धमन्त्रस्य प्रयोगः क्रियते बुधैः ॥ ८४॥

चतुर्विंशतिवर्णैर्या गायत्री गुम्फिता श्रुतौ ।
रहस्यमुक्तं तत्रापि दिव्यैः रहस्यवादिभिः ॥ ८५॥

रहस्यमुपवीतस्य गुह्याद्गुह्यतरं हि यत् ।
अन्तर्हितं तु तत्सर्वं गायत्र्यां विश्वमातरि ॥ ८६॥

अयमेव गुरोर्मन्त्रः यः सर्वोपरि राजते ।
बिन्दौ सिन्धुरिवास्मिंस्तु ज्ञानविज्ञानमाश्रितम् ॥ ८७॥

आभ्यन्तरे तु गायत्र्या अनेके योगसञ्चयाः ।
अन्तर्हिता विराजन्ते कश्चिदत्र न संशयः ॥ ८८॥

धारयन् हृदि गायत्रीं साधको धौतकिल्बिषः ।
शक्तीरनुभवत्यग्राः स्वस्मिन्नेव ह्यलौकिकाः ॥ ८९॥

एतादृश्यस्तु वार्ता भासन्तेऽल्पप्रयासतः ।

यास्तु साधारणो लोको ज्ञातुमर्हति नैव हि ॥ ९०॥

एतादृश्यस्तु जायन्ते तन्मनस्यनुभूतयः ।
यादृश्यो न हि दृश्यन्ते मानवेषु कदाचन ॥ ९१॥

प्रसादं ब्रह्मज्ञानस्य येऽन्येभ्यो वितरन्त्यपि ।
आसादयन्ति ते नूनं मानवाः पुण्यमक्षयम् ॥ ९२॥

गायत्री संहिता ह्येषा परमानन्ददायिनी ।
सर्वेषामेव कष्टानां वारणायास्त्यलं भुवि ॥ ९३॥

श्रद्धया ये पठन्त्येनां चिन्तयन्ति च चेतसा ।
आचरन्त्यानुकूल्येन भवबाधां तरन्ति ते ॥ ९४॥